# SÂHITYA-DARPANA

OF

## VIS'VANÂTHA KAVIRÂJA

**With the Commentary of**

## RÂMACHARANA-TARKAVÂGÎS'A BHATTÂCHÂRYA.




ANNOTED BY

**PANDIT DURGÂPRASÂDA DVIVEDA,**

LATE HEAD PANDIT, MAHARAJA SANSKRIT COLLEGE, JAIPUR.



THIRD EDITION.



REVISED BY

**SRÎNIVÂSA VENKATRÂMA S'ARMA.**





PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR, "NIRNAYA-SÂGAR" PRESS.

Bombay:

1915.

*Price 3 Rupees.*

# साहित्यदर्पणः ।

श्रीविश्वनाथ-कविराज-प्रणीतः ।

श्रीरामचरण-तर्कवागीश-भट्टाचार्य-कृतया टीकया समेतः ।



जयपुरराजकीयसंस्कृतपाठशालाप्रधानाध्यापकेन

## श्रीदुर्गाप्रसादद्विवेदेन

संकलितया टिप्पण्यानुगतः ।



वेङ्कटरामतनुजनुषा श्रीनिवासशर्मणा संशोधितः ।

( तृतीयं संस्करणं )



स च

मुम्बय्यां

तुकाराम जावजी इत्येतैः स्वीये निर्णयसागराख्यमुद्रण-

यन्त्रालये रामचन्द्र येसू शेडगे द्वारा

मुद्रयित्वा प्रकाशितः ।



१९१५.



मूल्यं रूप्यकत्रयम् ।

ॐ नमः शिवाय ।

# भूमिका ।

अथ खल्विदं हिताहितौपयिकमौलिभूतं साहित्यशास्त्रं कदा प्रादुरासेति मीमांसाव्यतिकरे श्रौताङ्गोपाङ्गसमानकालिकमित्यध्यवसायः प्रमातृहृदयंगमः स्यात् । तत्तद्दर्शनानां तदनुप्राणितानामितरेषां चोच्चावचानां निबन्धानामाम्नायोपजीवकत्वेन मार्मिकाणां विप्रतिपत्त्यवसरः । यतोऽशतस्तत्र तत्र त्रय्यामनुस्यूतानां पदार्थसार्थानां रहस्यमादायैवाधिगतयाथातथ्यैर्भुवनगुरुभिर्महर्षिभिर्लोकोद्दिधीर्षया प्रसादमधुराणि गभीराणि तीर्थानि निरमायिषत । वेदेषु सर्वे दर्शनवादाः समासतो व्यासतश्च विनिर्दिष्टा इति व्यक्तमपि

**'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्या ।**
**संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः ॥'**

इति श्वेताश्वतरश्रुत्या व्यक्ततरमवसीयते ।

किं बहुना । तादृशः कोऽपि प्रमेयोऽद्यावधि तत्त्वविदां प्रतिभापथं नावतीर्णो यः खलु सम्यक् परीक्षितस्ततो व्यतिरिच्येत । कुहचिद् व्यतिरिक्त इवाभासमानोऽपि पौ-

---

१. **उपाङ्गेति** । 'अथ चत्वार्युपाङ्गानि वेदानां संप्रचक्षते । धर्मशास्त्रं पुराणं च मीमांसा न्यायविस्तरः ॥' इति ॥

२. **त्रय्यामिति** । ऋग्यजुःसामलक्षणेन रचनात्रैविध्येन त्रयीति व्यपदेशः, तेनाथर्वणस्यापि संग्रहः ॥

३. **महर्षिभिरिति** । ऋपन्ति वेदं पश्यन्तीति ऋषयः । इह दर्शनं प्रत्यक्षीकरणमेव, न चाक्षुषज्ञानम् । तथा चोक्तं तैत्तिरीये यजुरारण्यके—'अजान् ह वै पृश्नींस्तपस्यमानान् [illegible] भ्यानर्ष त ऋषयोऽभवंस्तदृषीणामृषित्वम्' इति । पृश्नीन् पुरुषान् । स्वयंभु प्र[illegible]पजीव्य प्रवृत्तम् । शेषं स्पष्टम् । अयमेवाशयो निरुक्तकाराणामपि ॥

४. **वेदेष्विति** । वेदेषु मन्त्रब्राह्मणेषु । 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यागमात् ॥

५. [illegible] **इति** । जगतः कालः कारणमिति कालविदः प्रतिपेदिरे । स्वभाव इति [illegible]काः । नियतिर्नियमः पुण्यापुण्यलक्षणः स एव कारणमिति मीमांसकाः । पूर्वपूर्व[illegible] संचितपुण्यापुण्यानुगुणतया जगत्सर्वज्ञेनेश्वरेणोत्तरकल्पादौ न सृज्यते, किंतु [illegible]मन्तरेण यदृच्छया जायत इति निरीश्वराः । भूतानि कारणमिति जगन्नित्य[illegible] । योनिः प्रकृतिः कारणमिति प्रकृतिवादिनः शाक्ताः । पुरुषो हिरण्यगर्भ एव [illegible] योगशास्त्रविदः । इतीत्थं चिन्त्या चिन्तामात्रमेव, न वस्तुस्थितिः । एवं काला[illegible]कारणत्वं न भवेत् न वा एषां संयोगः कारणं भवेत् । आत्मभावात् । एता[illegible]कृत्य स्थितस्य भोक्तुरात्मनो भावात्, अत एषां भोग्यत्वेन परतन्त्रत्वात्स्वतन्त्र[illegible]त्वं न संभवेत् । आत्मापि कारणं न संभवेत् । यतोऽयं जगन्निर्माणेऽनीशोऽस[illegible] । सुखदुःखहेतोः पुण्यापुण्यवशत्वेन सुखदुःखहेतुतया वर्तमानत्वात् ॥

र्वापर्यपर्यालोचनया विचिकित्साराहित्ये पुनस्तदवस्थ इत्यतिरोहिते किं निदर्शनोद्घोषणया । एवं कथमिह तदुपादेयताभूमाभिधीयत इति विधादाख्येऽनिर्वचनीय इति निर्वचनाः स्मः ।

एतत्तीर्थरूढस्यैतस्य प्रमेयस्यैतस्मिन्नानुश्रविके वचसि सत्तालाभ इति परीक्षाप्रस्तावस्य प्रचुराभिधेयत्वात्प्रस्तुतानुपयुक्तत्वाच्चानवसर इत्यवसरोऽनुसृियते । साहित्यशास्त्रस्यालंकारादयः कतिपये विषयास्तु श्रुतिसूत्ताना एव । यथा—

'अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥'

इति निरुक्तोदाहृते कक्षीवत आर्षे, तथा—

'सूर्यस्येव वक्षसो ज्योतिरेषां समुद्रस्येव महिमा गभीरः ।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ॥'

इतीन्द्रस्यार्षे चोपमालंकारः । कक्षीवदार्षमधिकृत्य 'चतस्र उपमाः' इति यास्कोक्तप्रतीकमुपादाय 'अभ्रातेव पुंस इत्येका । गर्तारोहिणीवेति द्वितीया । जायेव पत्य इति तृतीया । हस्रेवेति चतुर्थी ।' इति व्याख्यातं चाचार्यदुर्गेण ।

'तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः ।
अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥'
'पञ्चस्रोतोऽम्बुं पञ्चयोन्युग्रवक्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् ।
पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥'

इति श्वेताश्वतरश्रुत्योः संसारस्य चक्ररूपत्वेन नदीरूपत्वेन च रूपणाद्रूपकम् ।

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥'
'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥'

इति श्रुत्यो रसगङ्गाधरे पण्डितराजेनातिशयोक्ति—सारालंकारौ दर्शिताविति निपुणं विभावनीयम् ।

एवमनेकेऽलंकारास्तत्र तत्र ऋगादिषु संक्रान्ता दृश्यन्ते । तत्र कतिचन साङ्गाः कतिचन च निरङ्गाः । नह्यलंकारनिरूपणायैव त्रयी प्रवृत्ता, यत्सपरिकरा उपलभ्येरन् । अपि च—

'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति'

इति श्रुतिः साकल्येन कविकर्मेतिकर्तव्यतोपज्ञामाज्ञापयति । तथाहि—'सम्यग्ज्ञात' इत्यनेन जातिक्रियागुणयदृच्छोपाधिविशकलितपदार्थावबोधः, 'सुप्रयुक्त' इत्यनेन हेयोपादेयनिगमनपूर्वकं पदार्थयोजनम्' 'स्वर्गे—' इत्यादिनैहिकामुष्मिकफलसंपत्तिश्चाध्यवसीयते । निरूपितलक्षणालक्षितप्रयोगे तु प्रत्यवायः । तथा च श्रुतिः—

'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुस्तस्माद्ब्राह्मणेन म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः ।'

अत्र ब्राह्मणपदं द्विजात्युपलक्षकम् । तेनेतरेषामसाधुभाषणे प्रत्यवायायोगः । अत एव **भरत**मुनिना दृश्यकविषये स्त्रीशूद्रादीनां मुख्यतः प्राकृतपाठ्यं व्यवस्थापितम् । किं पल्लवितेन ।

**'ब्रह्मैव रसः । रसो वै सः ।'**

इत्यादिश्रुत्या कविकर्मजीवातू रसोऽप्युपदिश्यते । आग्नेयपुराणे हि भगवता **कृष्णद्वैपायनेन** समस्तमेतत्काव्यानुशासनरहस्यमुपन्यासि । एवमादिवेदार्थवेदकत्वेनैव पुराणस्य पञ्चमवेदत्वेन व्यपदेशः स्मर्यते—

**'इतिहासपुराणं च पञ्चमो वेद उच्यते ।'**

इतिहासपुराणयोः पञ्चमवेदत्वेन व्यवहारस्तत्सादृश्यख्यापनार्थम् । सादृश्यं च 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्' इति । प्रकृते ऋग्यजुःसाम्नामानुपूर्व्या पाठासत्त्वे वेदभिन्नत्वम्, तदुक्तप्रमेयजाताविर्भावकत्वेन पुमर्थसाधकत्वादमुष्य वेदधर्मवत्त्वम् । स्मर्यते हि—

**'भारतव्यपदेशेन ह्याम्नायार्थाश्च वर्णिताः ।'**

इह भारतपदं पुराणस्यापि संग्राहकम्, इतरथा इतिहासपुराणयोः पञ्चमवेदत्वाख्यानं विरुध्येत । श्रुतावुदीरितानामर्थानां स्मरणादेव भगवता **जैमिनिना** 'धर्मस्य शब्दमूलत्वाद्–' इत्यादिसूत्रद्वय्या स्मृतिप्रामाण्याधिकरणमकारि, निराकारि च तत्र–

**'औदुम्बरीं स्पृष्ट्वोद्गायेत् ।'**

**'औदुम्बरी सर्वा वेष्टयितव्या ।'**

इत्यादिश्रुतिस्मृतिविप्रतिपत्तौ स्मृत्या बोधितं ज्योतिष्टोमे मध्येसदोमण्डपं निखातुमर्हाया उदुम्बरशाखाया वाससा वेष्टनम्, सर्ववेष्टने श्रुतिबोधितस्पर्शसंभवाभावात् । अयमिह निर्यासो यत्खलु सर्वत्र श्रुत्यनुसरणमेव गौरवानुबन्धे बीजमित्यन्यत्र विस्तरः ।

रत्त्वबुभुत्सूनां प्रतिपत्त्यर्थमाग्नेयप्रतिपादिताः साहित्यशास्त्रविषयः समासतो

े—

शदधिकत्रिशततमे(३३६)ऽध्याये—

**'काव्यस्य नाटकादेश्च अलंकारान्वदाम्यथ ।'**

तिज्ञाय काव्यभेदं च समुद्दिश्य तत्र—

**'नरत्वं दुर्लभं लोके विद्या तत्र च दुर्लभा ।**
**कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा ।**
**व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः '**

वान्ायुक्त्या विवेकस्य परं परत्वमभिहितम् । ततो गद्य–पद्य–मिश्रभेदेन का- ध्यमभिधाय तत्र गद्यस्य चूर्णकादयो भेदाः सलक्षणं लक्षिताः । तत आख्यायिका–कथा–खण्डकथा–परिकथा–कथानिकेति पञ्चविधं गद्यकाव्यमुद्दिश्य प्रत्येकस्य लक्षणमाम्नातम् । तदनु—

**'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति त्रिधा ।'**

इत्यादिना पद्यभिदां तन्निर्वर्त्यस्य महाकाव्यस्य निर्माणपरिपाटी चोपदिश्यन्ते—

'अत एव महाकाव्यं तत्कर्ता च महाकविः।
वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्॥'

इत्यादिनाध्याय उपसंहृतः॥

ततः सप्तत्रिंशदधिकत्रिशततमे(३३७)ऽध्याये प्रथमं सभेदं नाटकादिरूपकं नाटिकाद्युपरूपकं चोद्दिश्य तत्र पूर्वरङ्गं तदङ्गभूताया नान्द्याः किंचित्स्वरूपादि च निर्णीतम्। तदनु प्रस्तावनापरपर्यायस्यामुखस्य तद्भेदभूतानां प्रवृत्तक-कथोद्घात-प्रयोगातिशयानां च लक्षणान्युक्तानि। ततो नाटकादिशरीरस्येतिवृत्तस्य सिद्धोत्प्रेक्षितभेदेन द्वैविध्यं बीजादिपञ्चार्थप्रकृतीनां प्रारम्भादिपञ्चचेष्टानां मुखादिपञ्चसंधीनां चाख्या आख्यायाध्यायोपसंहारो विहितः॥

ततोऽष्टात्रिंशदधिकत्रिशततमे(३३८)ऽध्याये—

'अक्षरं परमं ब्रह्म सनातनमजं विभुम्।
वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम्।
आनन्दः सहजस्तस्य व्यज्यते स कदाचन।
व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया॥
आद्यस्तस्य विकारो यः सोऽहंकार इति स्मृतः।
ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्॥
अभिमानाद्रतिः सा च परिपोषमुपेयुषी।
व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते॥'

इत्यनेन शृङ्गारं व्युत्पाद्य रागाच्छृङ्गारस्य तैक्ष्ण्याद्रौद्रस्यावष्टम्भाद्वीरस्य संकोचाद्बीभत्सस्य च व्यक्तिरुदिता। तदनु शृङ्गाराद्धासस्य रौद्रात्करुणस्य वीराद‌द्भुतस्य बीभत्साद्भयानकस्य च निष्पत्तिराम्नाता। ततश्च—

'अपारे[1] काव्यसंसारे कविरेव प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्।
स चेत्कविर्वीतरागो नीरसं व्यक्तमेव तत्॥'

इत्यनेन नाटकादिशरीरनिर्माणे कवयितुः स्वातन्त्र्यं दर्शितम्। तदनु रत्यादयः स्तम्भादयो निर्वेदादयश्च लक्षिताः। विभावादिकथनप्रसङ्गेन धीरोदात्तादयो नायकास्तदीयनर्मसचिवाः पीठमर्दादयो नायिकानां भेदाश्च निर्दिष्टाः। ततः शोभा-विलास-माधुर्यादिपौरुषाणां हाव-भाव-हेलादिस्त्रैणानामाभाषणादिसामान्यानां च विषयाणां वर्णनेनाध्यायोपसंहारो विहितः॥

एकोनचत्वारिंशदधिकत्रिशततमे(३३९)ऽध्याये पाञ्चाल्यादिरीतिर्भारत्यादिवृत्तीश्चाख्याय 'भरतेन प्रणीतत्वाद्भारती वृत्तिः' इति योगो दर्शितः। ततो वीथ्यादिभारत्यङ्गानामुद्घातकादिवीथ्यङ्गानां चाभिधानेनाध्यायोपसंहारो विहितः॥

---

१ अपारे इति। 'अपारे—' इति श्लोकद्वयमुपन्यस्तमानन्दवर्धनाचार्यैर्ध्वन्यालोकस्य तृतीयोद्द्योते॥

चत्वारिंशदधिकत्रिशततमे(३४०)ऽध्याये लीला–विलास–विच्छित्त्यादयश्चेष्टा निरूपिताः। ततः शिरःपाण्यादीन्यङ्गानि भ्रूलतादिप्रत्यङ्गानि चाभिधाय—

'आकम्पितं कम्पितं च धुतं विधुतमेव च।
परिवाहितमाधूतमवधूतमथाञ्चितम्॥
निकुञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम्।
ललितं चेति विज्ञेयं त्रयोदशविधं शिरः॥'

इत्येवमाद्याः काश्चन भिदा अप्युद्भाविताः॥

एकचत्वारिंशदधिकत्रिशततमे(३४१)ऽध्याये—

'आभिमुख्यं नयन्नर्थान्विज्ञेयोऽभिनयो बुधैः॥'

इत्यभिनयपदार्थं व्युत्पाद्य सत्त्वाद्याश्रयेणामुष्य सात्त्विकादिभेदचतुष्टयी निरूपिता। ततः संभोगविप्रलम्भरूपेण शृङ्गारस्य द्वैविध्यमभिधाय पुनस्तयोः प्रच्छन्नाप्रच्छन्नगतत्वेन द्वैविध्यमुदीरितम्। तत्र च विप्रलम्भस्य पूर्वराग–मान–प्रवास–करुणात्मकत्वेन चातुर्विध्यम्। तदनन्तरजायमानसंभोगलक्षणस्य शृङ्गारस्य धर्मार्थकाममोक्षाख्येन चतुर्वर्गेणोपचयोऽभिहितः। पुनश्च वाङ्नेपथ्यक्रियात्मकतया शृङ्गारस्य भेदः। ततो हासस्य स्मितादयो भेदाः। धर्मोपघात–चित्तविलास–शोकजन्यत्वेन करुणस्य, अङ्गनेपथ्य–वाक्यजन्यत्वेन रौद्रस्य, दान–धर्म–युद्धजन्यत्वेन वीरस्य च त्रैविध्यमाम्नातम्। भयानकस्य कैवल्यम्, बीभत्सस्योद्वेजनक्षोभणाभ्यां द्वैविध्यम्। अथ च—

'काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते।
अलंकरिष्णवस्ते च शब्दमर्थमुभौ त्रिधा॥
ये व्युत्पत्त्यादिना शब्दमलंकर्तुमिह क्षमाः।
शब्दालंकारमाहुस्तान्काव्यमीमांसका विदः॥'

[illegible]मुक्त्वा छाया–मुद्रादयः शब्दालंकाराः कीर्तिताः। तत्र लोकोक्ति–अर्भकोक्ति–मत्तोक्तिभेदेन च्छायायाश्चातुर्विध्यम्।

'अभिप्रायविशेषेण कविशक्तिं विवृण्वती।
मुदायिनीति सा मुद्रा सैव शय्यापि नो मते॥'

[illegible]न्तरे शय्याख्यशब्दालंकृतेः पार्थक्यम्। एवमादिशब्दलभ्यानामपि भिदाः [illegible]रिंशदधिकत्रिशततमे(३४२)ऽध्याये मधुरा–ललिता–प्रौढा–भद्रा–परुषेति [illegible] लक्षणम्। तदनु—

'यमकं त्वव्यपेतं च व्यपेतं चेति तद्द्विधा।
आनन्तर्यादव्यपेतं व्यपेतं व्यवधानतः॥'

[illegible] संदर्भेण यमकभेदाः। प्रश्न–प्रहेलिका–गुप्त–च्युत–दत्त–च्युतदत्त–[illegible] सप्तविधं चित्रम्। तत्रैकपृष्टद्विपृष्टोत्तरभेदेन प्रश्नस्य द्वैविध्यम्। शाब्दी, आर्थी [illegible] प्रहेलिकाया द्वैविध्यम्।

'यस्मिन्गुप्तेऽपि वाक्याङ्गे भात्यर्थोऽपारमार्थिकः।
तदङ्गविहिताकाङ्क्षस्तद्गुप्तं गूढमप्यदः॥'

इति गुप्तस्य कैवल्यम् । स्वर–व्यञ्जन–बिन्दु–विसर्गच्युतिभेदेन च्युतस्य चातुर्विध्यम् । उक्तोपाधिभिरेव दत्त–च्युतदत्तयोर्भेदाः ।

'सुश्लिष्टपद्यमेकं यन्नानाश्लोकांशनिर्मितम् ।
सा समस्या परस्यात्मपरयोः कृतिसंकरात् ॥'

इत्युक्तरूपायाः समस्याया नियम–विकल्प–बन्धभेदेन त्रैविध्यम् । ततः—

'अनेकधा वृत्तवर्णविन्यासैः शिल्पकल्पना ।
तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते ॥'

इति परिभाष्य गोमूत्रिकादयो बन्धास्तद्विन्यासविधयो महता संदर्भेण कीर्तिताः ॥

त्रिचत्वारिंशदधिकत्रिशततमे(३४३)ऽध्याये—

'स्वरूपमथ सादृश्यमुत्प्रेक्षातिशयावपि ।
विभावना विरोधश्च हेतुश्च सममष्टधा ॥'

इत्युद्दिश्य सांसिद्धिक–नैमित्तिकभेदेन स्वरूपस्य द्वैविध्यम्, उपमा–रूपक–सहोक्ति–अर्थान्तरन्यासभेदेन सादृश्यस्य चातुर्विध्यावान्तरविधे, उत्प्रेक्षायाः कैवल्यम्, अतिशयस्य संभवासंभवाभ्यां द्वैविध्यम्, विभावना–विरोधयोः कैवल्यम्, हेतोः कारक–ज्ञापकभेदेन द्वैविध्यं चाम्नातम् ॥

चतुश्चत्वारिंशदधिकत्रिशततमे(३४४)ऽध्याये—

'शब्दार्थयोरलंकारो द्वावलंकुरुते समम् ।
एकत्र निहितो हारः स्तनं ग्रीवामिव स्त्रियाः ॥'

इति शब्दार्थालंकारस्योभयोपकारकत्वमभिधाय प्रशस्ति–कान्ति–औचित्य–संक्षेप–यावदर्थता–अभिव्यक्तिभेदेन षोढात्वमुक्तम् । तत्राभिव्यक्तिभेदप्रतिपादनावसरेऽभिधेयसंबन्धात्सामीप्यात्समवायाद्वैपरीत्यात्क्रियायोगाच्च लक्षणायाः पञ्चविधत्वम् ॥

पञ्चचत्वारिंशदधिकत्रिशततमे(३४५)ऽध्याये—

'अलंकृतमपि प्रीत्यै न काव्यं निर्गुणं भवेत् ।
वपुष्यललिते स्त्रीणां हारो भारायते परम् ॥'

इत्याख्याय सामान्य–वैशेषिकभेदेन गुणस्य द्वैविध्यं वर्णितम् । तत्र सामान्यस्य शब्दार्थोभयनिष्ठत्वेन त्रैविध्यमभिधाय प्रत्येकप्रकारस्यावान्तरभिदा निरूपिताः । अन्ते—

'वैशेषिकः परिज्ञेयो यः स्वलक्षणगोचरः ।'

इत्युक्त्वाध्यायः समापितः ॥

षट्चत्वारिंशदधिकत्रिशततमे(३४६)ऽध्याये आरम्भत एकोनत्रिंशता श्लोकैरुच्चावचाः काव्यदोषा दर्शिताः । ततः कविसमयमूरीकृत्य—

'सिद्धसैद्धान्तिकानां च कवीनां चाविवादतः ।
यः प्रसिध्यति सामान्य इत्यसौ समयो मतः ॥
सर्वे सैद्धान्तिका येन संचरन्ति निरत्ययम् ।
कियन्त एव वा येन सामान्यस्तेन स द्विधा ॥
छेदसिद्धान्ततोऽन्यः स्यात्केषांचिद्भ्रान्तितो यथा ।
तर्कज्ञानं मुनेः कस्य कस्यचित्क्षणभङ्गिका ॥

**भूतचैतन्यता कस्य ज्ञानस्य स्वप्रकाशता ।**
**प्रज्ञातस्थूलता शब्दानैकान्तत्वं तथार्हतः ॥**
**शैववैष्णवशाक्तेयसौरसिद्धान्तिनां मतिः ।**
**जगतः कारणं ब्रह्म सांख्यानां सप्रधानकम् ॥'**

इत्युदीरितम् । अन्ते—

**'विष्णुः स्वर्गादिहेतुः स शब्दालंकाररूपवान् ।**
**अपरा च परा विद्या तां ज्ञात्वा मुच्यते भवात् ॥'**

इत्यनेन शब्दब्रह्मणो याथातथ्येनावगमात्कैवल्यलाभोऽपि दर्शितः ॥

एवं सपरिकरस्य साहित्यशास्त्रस्य बीजमङ्कुरोन्मुखमाग्नेये जागर्ति । तत एवैतदाहृत्य महामतिमन्तः स्वस्वप्रतिभोन्मेषमहिम्ना नैकभेदत्वमानिन्युः । अत एवाभाणि तत्रभवता दण्डिना—

**'काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते ।**
**ते चाद्यापि विकल्प्यन्ते कस्तान्कात्स्न्येंन वक्ष्यति ॥**
**किंतु बीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम् ।**
**तदेव परिसंस्कर्तुमयमस्मत्परिश्रमः ॥'**

इत्थं च प्रभुसंमितेषु वाक्यकदम्बेषूप्तं सुहृत्संमितेष्वङ्कुरितं कान्तासंमितेषु पल्लवितं पुष्पितं फलितं चादो मुदो भाजनं दर्शनमतितरां परिपोषमापेदे ।

कोऽस्याग्नेये संनिवेशसमय इति पर्वपक्षे, धर्मराजस्य राज्यासन्नानेहेति सिद्धान्तमुपेयाः । तथाहि—

**'आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ ।**
**षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च ॥'**

इति शाकद्वीपीय-श्री**वराहमिहिराचार्यो**क्त्या पञ्चविंशत्यधिकपञ्चविंशतिशतीसमो यौधि[illegible]ः शकः सिध्यति । स च वर्तमानेन शालिवाहनशकेन संकलितो यौधिष्ठिरश[illegible]भादद्यावध्यतिक्रान्तः समाससूहः संपद्यते २५२६+१८२०=४३४६ अ[illegible]मुखात्त्रिपञ्चाशदधिकषट्शतीसंख्यवत्सरातिक्रमे यौधिष्ठिरः शकः प्रावर्तत । तथा[illegible]क्तं **कह्लणेन**—

**'शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले ।**
**कलेर्गतेषु वर्षाणामभूवन्कुरुपाण्डवाः ॥'** इति ।

तथा च कलितः पाण्डवसत्ताकालः =६५३
ततः शालिवाहनसत्ताकालः=२५२६
वर्तमानशककालः=१८२०
गतकलिकालः=४९९९ एकोनपञ्चसहस्रम् ।

---

**शाकेति** । शाकद्वीपीयो भोजको मग इति पर्यायशब्दाः । अत्रत्यविशेषस्तु भवि[illegible]पुराणे साम्बोपपुराणे च विस्तरतो वर्णितः । एतेन जयपुरादौ वर्तमानाः पाराशरा एव भोजका भवन्तीति प्रवादो भ्रममूलक एव ॥

अथ किं तावत्साहित्यम्, सहितस्य व्याकरणन्यायमीमांसाकलादेर्भाव इत्यवगच्छ। 'गुणवचन–' (५।१।१२४) इत्यादिना ष्यञ्। व्याकरणादीनामुपकारकत्वं तु प्रत्यक्षम्। उक्तं चाप्तैः—

'न स शब्दो न तद्वाच्यं न स न्यायो न सा कला।
जायते यन्न काव्याङ्गमहो भारो महान्कवेः॥'

एतेन व्याकरणादिपरिशीलनमन्तरा काव्यरचनोद्यमो महाननर्थकारीति भव्योदर्का ज्यायसी शिक्षावेद्यते। अत एवागादि कविमाणवकागदंकारैः—

'अधीत्य शास्त्राण्यभियोगयोगादभ्यासवश्यार्थपदप्रपञ्चः।
तं तं विदित्वा समयं कवीनां मनःप्रसक्तौ कवितां विदध्यात्॥' इति।

आवेद्यमानादेशातिक्रमणे तु—

'स्वाधीनो रसनाञ्चलः, परिचिताः शब्दाः कियन्तः, क्वचि-
त्क्षोणीन्द्रो न नियामकः, परिषदः शान्ताः, स्वतन्त्रं जगत्।
तद्यूयं कवयो वयं वयमिति प्रस्तावनाहुंकृति-
स्वच्छन्दं प्रतिसद्म गर्जत वयं मौनव्रतालम्बिनः॥'

इत्थंभूतानां परवाक्यानां पात्रीभवनमीषत्करम्॥

एतत्साहित्यशास्त्रमलंकारशास्त्रत्वेनापि व्यवह्रियते। तत्रालंकृतिरलंकार इति भावसाधनोऽलंकारशब्दः। अलंक्रियतेऽनेनेति करणव्युत्पत्त्या तूपमादिषु प्रयुज्यते। अथवा 'प्रधाने हि व्यपदेशा भवन्ति' इति नियममनुसृत्य करणव्युत्पन्नस्यापि शास्त्राभिधेयत्वेन न काचिदनुपपत्तिः॥

एतस्य साहित्यशास्त्रस्यानेके निबन्धा उत्पन्नाः प्रचरिताः प्रणष्टाश्चेति पूर्वपूर्वतरग्रन्थावगाहनेन व्यक्तमेव तत्त्वनिर्णायकानाम्। विजयतां विजयतां श्रीमती **राजराजे-**

---

१. बहुविघ्नोपसंक्रमे दर्पणस्य शोधनटिप्पणीकरणोपक्रमे, क्रममाणे च काले, कालनियन्त्रिते लौकिके लोकनियन्तृशक्तिसमुन्मेषे, समुन्मिषत्तिमिरावरणशरणीभूते प्रभूते भारताभोगे, अपारपारमेश्वरविकस्वरानुग्रहेण निरवग्रहशुभोदर्कभूम्ने लोकालोककोकायमानमसमानप्रभावभास्वरं भास्करोद्गममिव सांप्रतं सांप्रतं श्रीमद्राजराजेश्वरसाम्राज्यपारिजातसंपज्जातमभितोऽभिनन्दन्ति नन्दितविश्वजनीनकर्तव्या भारतवर्षवास्तव्याः। भवन्ति चात्राभिनन्दनश्लोकाः—

'अये कलिन्दनन्दिनीतटावनीवनीस्फुरन्निकुञ्जकेलिकल्पनावलीवलीढमानस।
भवद्दयोदयादयान्नृपेन्द्रपीठमाश्रयन्प्रजाः प्रजावदूर्जयन्स **एडवर्ड** एधताम्॥ १॥
नमन्नरेन्द्रमण्डलीकिरीटकोटिसंचरत्स्फुरत्प्रतापवैभवे भवत्युदारभर्तरि।
निवर्ततां द्विषत्कथा प्रवर्ततां महोत्सवो विकासतां सतां मनो विजृम्भतां च भारतम् २
इतो महीमहोदया दयावदानशालिनो **युरोपभूभुजस्तव** स्तवोद्गमाभिषेचने।
स्वधर्मशासनाशनादिकक्रियाक्रियाक्रमं क्रमन्ति **लण्डने**ऽधुना विलोचनैकनन्दने॥ ३॥
न तादृगस्ति पत्तनं न केतनं न वायनं न यत्र संगताः समुच्छलत्प्रमोदमोदिताः।
गृणन्ति तावकं शिवं स्मरन्ति तावकं शिवं परस्परोक्तितो विजृम्भयन्ति तावकं शिवम् ४
कुहचिद्यशसा कुहचिन्महसा कुहचिद्यशसा महसा सहसा
वशयन्नमयन्विनयन्नभितो जनता जनतापविमर्दयिता।

श्वरी द्विरुक्तिरिन्दिराया उपनिषन्निःश्रेयसाद्वैतवादस्य, यत्प्रभावोद्योतदन्तुरे वर्तमानसमये साधारणीभवन्ति दुष्प्रापाण्यपि ग्रन्थरत्नानि, प्रभवन्तीव कलिकालविषमूर्च्छितापि भारतीया भारती ॥

अथास्मद्दृष्टश्रुतेषु शतासन्नेषु साहित्यग्रन्थेषु ध्वन्यालोक–काव्यप्रकाश–साहित्यदर्पण–रसगङ्गाधरा एव नायकायन्त इत्युक्तिर्नातिशयिता । तत्रापि ध्वन्यालोकस्य ध्वनिस्थापनार्थमेव प्रवृत्तत्वान्नेह तदतिरिक्तालंकारीयविषयविशेषप्रपञ्चनम् । ध्वनिकथा त्वत एव काव्यप्रकाशादिषु संकलिता । उक्तं चामुष्य निर्मातारमुद्दिश्य—

'ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥' इति ॥

काव्यप्रकाशे तु दृश्यकाव्यप्रतिपादनमन्तरा प्रायः सर्व एव साहित्यशास्त्रीयः पदार्थः सूक्ष्मानुसंधानेन व्यवस्थापितः । किं पल्लवितेन, प्रथितश्च गुणगरिम्णैव—

'काव्यप्रकाशो यवनः काव्याली च कुलाङ्गना ।
अनेन प्रसभाकृष्टा कष्टामेषाश्नुते दशाम् ॥'

इति तत्प्रशंसापर्यवसायी श्लोकः ।

रसगङ्गाधरस्तु सर्वातिशायी स्याद्, यदि दुर्दैवहतकेन तत्पूर्तिः सह्येत । अमुष्योत्कृष्टता यथोद्घुष्टा तथैव दरीदृश्यते । उक्तं च तैलङ्गपुंगवेन—

'निमग्नेन क्लेशैर्मननजलधेरन्तरुदरं
मयोन्नीतो लोके ललितरसगङ्गाधरमणिः ।
हरन्नन्तर्ध्वान्तं हृदयमधिरूढो गुणवता-
मलंकारान्सर्वानपि गलितगर्वान्रचयतु ॥'

अयमुदात्तालंकारप्रस्तावे पादोनार्यायामेव विरम्यते । अहो कीदृशी दुर्दैवघटन
रि निपतिता, यन्नियन्त्रितः—

क कुर्वते दरिद्राः कासारवती धरा मनोज्ञतरा ।
: पावनस्त्रिलोक्याम्........................ ॥'

न्तमार्यायाश्चरमं चरणमपि पूरयितुं न पारितवान् । समस्तसाहित्यसंमित्रीयस्यास्य कयापि कलया विकलाप्याननद्वयी सकलसहृदयहृदयावर्जणा । मन्ये चामुष्य पञ्चाननतायां साकल्येनालंकारिककुलकुञ्जराणां
ति जगन्नियन्त्रान्तरायः पातित इति ॥

## साहित्यदर्पणः ।

ाहित्यदर्पणस्तु ध्वन्यालोक–काव्यप्रकाशप्रभृतिपदार्थप्रतिपादको भूत्वापि

---

भव भारतभूवलयैकविभो परमेश्वरसान्द्रदयार्द्रदृशा ।
सह वेदनिवेदितवृत्तजुषा प्रभुमाधवसिंहधराधिभुवा ॥ ५ ॥

१. रसगङ्गाधरस्योपमर्दाय निष्पन्नोऽप्यलंकारकौस्तुभो नैतादृक् सहृदयहृदयावर्जकः । उपमालंकारावधिस्तु ख्यापयति ग्रन्थकर्तुर्व्याकरणन्यायपाण्डित्यम् ॥

दृश्यकविकर्मविषये केवलतन्निरूपकदशरूपकादिनिबन्धमधरीकरोति। प्रकाशवदेषोऽपि कारिकाव्याख्योदाहृतिभिस्त्रिधा निरूपितः। तत्र कारिकाः स्वीया एव, उदाहृतयस्तु परकीयाः स्वीयाश्चाप्यासते। प्रमेयाणामुपपादनं तु प्रायेण प्राञ्जलमेव, यत्तु कुत्रचिद्गहनं तद्विषयनिबन्धनमूलकम्, न तावल्लेखकाठिन्यमूलकम्। किं कथनारभव्या, दुर्गमा दुर्लभाश्चापि विषया इह तथा विशकलिता यथा सुखेन सुकुमारमतिभिरप्यवगन्तुं शक्यन्ते।

एवं चैष साहित्यशास्त्रे व्युत्पित्सूनां परिशीलितव्याकरणतर्काणां छात्राणामुदारधीशय्यामधिरोढुमर्हतीति न स्तुतिपाठः। अवादि चावसाने—

**'साहित्यदर्पणममुं सुधियो विलोक्य**
**साहित्यतत्त्वमखिलं सुखमेव वित्त ॥'**

यस्त्विह कुत्रचिच्छृङ्गारतरङ्गितः प्रस्तावः स नैतस्य दूषणाय प्रभवति, इति दोषमाशङ्क्यैवावाचि काव्यालंकारे **रुद्रटेन**—

**'नहि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः।**
**कर्तव्यतयान्येषां नच तदुपायाऽभिधातव्यः॥**
**किंतु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति।**
**आराधयितुं विदुषस्तेन न दोषः कवेरत्र ॥'**

अस्य दर्पणस्य कर्ता सांधिविग्रहिको महापात्रश्चन्द्रशेखरसूनुः श्री**विश्वनाथ**कविराजः। शं० १२८७ ख्रि० १३६५।

एष शालिवाहनशकस्य त्रयोदशशताब्द्या अन्तिमभागे आसीत्, यतो **जयन्तम् अलावद्दीनं** च स्मरति। यद्यपि प्रसिद्धदर्पणपुस्तके जयन्तस्य नाम नोपलभ्यते तथापि प्राचीनपुस्तके[1] 'यः कौमारहरः—' इति श्लोकस्य प्रपञ्चे 'अत्र यज्जयन्तेनोक्तम्—' इत्यादिना नाम गृहीतम्। अयं जयन्तः खेषुविश्व (१३५०)मिते विक्रमाब्दे प्रकाशस्य दीपिकाख्यां व्याख्यां कृतवानिति तत्कृतदीपिकान्ते[2] व्यक्तम्। अलावद्दीनस्य नाम तु

---

१. **प्राचीनेति**। अस्य पुस्तकस्य षोडशपृष्ठे तृतीयपङ्क्तिस्थं **ग**-पुस्तकस्थपाठान्तरं निरीक्षणीयम्॥

२. तथाहि 'संवत् १३५० वर्षे ज्येष्ठवदि ३ रवौ अद्येह आशापल्लीसमावासितश्रीमद्विजयकटके सकलारातिभूपालमौलिमुकुटालंकारभूषितपादपङ्कजमहाराजाधिराजश्रीसारङ्गदेवकल्याणविजयराज्ये साहित्यविद्याबिसिनीविकासनैकभास्करस्य सकलालंकारविवेकचतुरमानसमानसराजहंसस्य षड्दर्शनपारावारपोतायमानावान्तरप्रतिभानिमज्जनैकमहापोतस्य निखिलपुराणपुराणीकृतमार्गेतरविद्वज्जनमनोज्ञानमहान्धकारसंहारसहस्रकरस्य श्रुतिस्मृतिमहार्थनिर्भ्रान्तविभ्रान्तविद्वज्जनमनोऽज्ञानतिमिरपरिहारचन्द्रोदयस्य श्रीमद्गुर्जरमण्डलेशमुकुटालंकारप्रभापरिचुम्बनबहुलीकृतचरणनखकिरणस्य महामात्यपुरोहितश्रीमद्भरद्वाजस्याङ्गभुवा पुरोहितश्रीजयन्तभट्टेन सकलसुधीजनमनोऽज्ञानतिमिरविनाशकारणं विरचितेयं काव्यप्रकाशदीपिका।

श्रीमद्भरद्वाजपदाम्बुजीयप्रसादतो ग्रन्थरहस्यमेतत्।
विज्ञाय किंचित्कृतवाञ्जयन्तस्तत्र प्रमाणं सुधियां वितर्कः॥

काव्यप्रकाशदीपिका समाप्ता॥' इति॥

चतुर्थपरिच्छेदे 'संधौ सर्वस्वहरणं—' इति श्लोके गृहीतम् । अयं यवनराजः शैलाग्निसूर्य(१२३७)मिते शालिवाहनाब्दे विषप्रयोगेण व्यापादित इत्यैतिहासिकाः ।

अथ चैनं काव्यप्रदीपे 'अर्वाचीनास्तु—' इत्यादिना 'तददोषौ काव्यार्थौ—' इति कारिकाव्याख्याने **गोविन्द**ठक्कुरः स्मरति । अयं मैथिलशिरोमणिः शालिवाहनस्य पञ्चदशशतकपूर्वभागे भवितुमर्हतीति बहवः ।

एवं च यदि अलावद्दीनस्य मृत्युकाले दर्पणकारस्य जन्मकालः कल्प्यते तदा पञ्चाशद्वर्षासन्ने वयसि दर्पणनिर्माणं संभाव्यते ।

राघवविलासमहाकाव्यस्य कुवलयाश्वचरितप्राकृतमहाकाव्यस्य चन्द्रकलाप्रभावतीनाटिकयोः षोडशभाषामय्याः प्रशस्तिरत्नावल्याश्च निर्माणानन्तरं दर्पणप्रणयनम्, तथा दर्पणस्य सुप्रसिद्धावस्थायामेव गोविन्दमहापण्डितस्य तादृशादरदर्शी लेखश्च प्रतिपादितकालकलनायां बीजम् ।

दर्पणरचनानन्तरं विश्वनाथेन नरसिंहविजयम्, काव्यप्रकाशदर्पण इति ग्रन्थद्वयी निरमायीति तत्कृतकाव्यप्रकाशदर्पणतो ज्ञायते ।

एतन्नाम सांधिविग्रहिक—महापात्र—कविराजेत्युपाधिघटितमास्ते, तत्र विचार्यते—संधिविग्रह इति राज्याधिकारविशेषः, तत्र नियुक्तः सांधिविग्रहिकः । संधिविग्रहाधिकृत इत्यर्थः । 'तत्र नियुक्तः' (४।४।६९) इति सूत्रेण ठक् । एष उपाधी राजतरङ्गिण्यादौ बहुत्र दृश्यते । सहृदयानन्दाख्यमहाकाव्यप्रणेता **कृष्णानन्दो**ऽप्यात्मानं सांधिविग्रहिक—महापात्रेति विशेषणाभ्यां कीर्तयति । महापात्रो ब्राह्मणविशेष इति केचित्। उपनामान्तरमिति परे । न च लेखकादिदोषवशान्महामात्रेण भवितव्यमिति वाच्यम्, तस्य प्रधानवाचकत्वे सांधिविग्रहिकेति सामान्योपाधिलेखस्य वैयर्थ्यापत्तेः । कविराज इति महाकविसमानार्थकम्, नतु **अवध**प्रान्तीयप्रधानहिन्दीभाषायां 'भाट' इति प्रसिद्धजातेरवगमकम् । अयमुत्कलदेशवासी स्मार्तवैष्णव इति ॥

अथ प्रसङ्गाद्दर्पणोट्टङ्कितानां ग्रन्थकाराणामितिवृत्तमकारादिक्रमेण मनाङ् निरूप्यते—

## अभिनवः (अभिनवगुप्तः)

एष शैवशिखामणिः प्रत्यभिज्ञादर्शनपरमाचार्यः शालिवाहनस्य दशमशताब्द्याः पूर्वभागे कश्मीरान्पवित्रतरीकुर्वाण आसीत् । इदम्—

**'इति नवतितमेऽस्मिन्वत्सरेऽन्त्ये युगांशे**
**तिथिशशिजलधिस्थे मार्गशीर्षावसाने ।'**

इति तदीय-बृहत्प्रत्यभिज्ञाविमर्शिनीश्लोकाज्ज्ञायते । अयमत्यन्तमहानुभावत्वाद् 'आचार्याभिनवगुप्तपादाः' इति सगौरवं कीर्त्यते राजानक-मम्मटादिभिः। एतस्य नामधेये गुप्तपदं काश्मीरिकब्राह्मणजातिविशेषदर्शकम्, नतु तदंशरूपत्वेनोपात्तम् । एवं च 'अभिनवः' इत्येव केवलं नाम । तथा प्रयुक्तमाचार्यशिष्येण **क्षेमराजे**न नेत्रोद्द्योतप्रारम्भे—

**'अभिनवबोधादित्यद्युतिविकसितहृत्सरोजान्मे ॥'**
**रसयत तरसा परिमलमसारसंसारवासनाशान्त्यै ॥'**

---

१. काश्मीरप्रचरिते लौकिके वर्षे । पञ्चविंशत्या वर्जितेषु कलिगतवर्षेषु शतावशेषितेषु यदवशिष्यते तल्लौकिकवर्षप्रमाणम् ।

आचार्येण प्रत्यभिज्ञाशास्त्रातिरिक्ता अपि ध्वन्यालोकलोचन–नाट्यलोचनाभिनवभारत्याख्यभारतीयनाट्यशास्त्रव्याख्याप्रभृतयो ग्रन्था विरचिताः। ध्वन्यालोकलोचनमेव लोचनशब्देन व्यवहृतवान्दर्पणकारः ॥

## उदयनः ।

अयमाक्षपादीनां काणादीनां च गिरां रहस्याविर्भावकः परमाचार्यः शालिवाहनस्यैकादशशताब्द्याः प्रारम्भे मिथिलामण्डले जागरूक आसीत् । अमुं च सप्तशत्यन्ते **गोवर्धनः**—

**'उदयन–बलभद्राभ्यां सप्तशती शिष्य–सोदराभ्यां मे ।**
**द्यौरिव रवि–चन्द्राभ्यां प्रकाशिता निर्मलीकृत्य ॥'**

इत्यार्यायां स्वशिष्यत्वेन सादरं स्मरति । गोवर्धनश्च गङ्गाधिपते**र्लक्ष्मणसेन**स्य सभायामेकः सभास्तार इतीतिवृत्तं तस्यैव सभासद्मशिलायामुत्कीर्णात्—

**'गोवर्धनश्च शरणो जयदेव[1] उमापतिः ।**
**कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥'**

इति श्लोकादवगम्यते । लक्ष्मणसेनश्च ख्रिस्तैकादशशताब्द्याश्चरमभागपर्यन्तमासीदित्यैतिहासिकाः । एवं च गोवर्धनादीनां समानकालिकता सुव्यक्ता ।

किंचैतदासन्नकाले तार्किक-गाणितिकशिरोमणिः **श्रीधरोऽ**प्यासीत् । यतोऽमुना प्रशस्तपादभाष्यस्य न्यायकन्दल्याख्यव्याख्यावसाने—

**'त्र्यधिकदशोत्तरनवशत (९१३) शाकाब्दे न्यायकन्दली रचिता ।**
**श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणैषा ॥'**

इत्युक्तम् । अथो चायं सिद्धान्तशिरोमणिकारेण तत्रभवता भास्कराचार्येण तथा तदनुगामिभिश्च तत्र तत्र स्मर्यते । एतेनास्य गाणितिकतापि स्फुटा ।

उदयनाचार्यप्रणीताः किरणावलीकुसुमाञ्जल्यादयो महापण्डितमान्या ग्रन्थाः सर्वत्र प्रख्याताः । आसंस्तदानीं वङ्गप्रान्ते लक्ष्मणसेन–पाण्डुदासप्रभृतयः कतिचन कायस्थपुंगवाः, येषामन्तिके एवंविधानि पण्डितरत्नानि व्यराजन्त । लक्ष्मणसेनस्य कायस्थता तु सेनपदेनैव व्यक्ता । वङ्गादिषु सांप्रतमपि कायस्थेषु सेनकुलं सुप्रसिद्धतरम् । गोवर्धनाचार्येण सप्तशत्यारम्भे—

**'सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च ।**
**सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥'**

एवं वर्णितो लक्ष्मणसेनः । पाण्डुदासस्य कायस्थता तु गुणरत्नाभरणः कायस्थकुलतिलकः पाण्डुदास इत्यादिषु पदेषूच्चार्यमाणेषु क्रमभाविनो वर्णाः परं प्रतीयन्ते– इत्यादिन्यायकन्दलीफक्किकयातिरोहिता ॥

## कालिदासः ।

उज्जयिनीनायकस्य श्री**विक्रमादित्य**महाराजस्य सभायामेकः कालिदास आसीदित्येके । तस्यैव चक्रवर्तिनः सभायां त्रयः कालिदासा आसन्निति परे । विक्रमार्ककाला-

---

१. अयं जयदेवश्चन्द्रालोकादिकर्तुर्जयदेवाद्भिन्नः ॥

दर्वाक् राजशेखरमहाकविकालात् प्राक् त्रय इतीतरे । इत्थं विप्रतिपत्तौ मीमांस्यते तावत्—अभिनन्द महाकवी रामचरिते—

'हालेनोत्तमपूजया कविवृषः श्रीपालितो लालितः
ख्यातिं कामपि कालिदासकवयो नीताः शकारातिना[1] ।
श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलं
सद्यः सत्क्रिययाभिनन्दमपि च श्रीहारवर्षोऽग्रहीत् ॥'

इत्युक्तवान् । तेन शकाख्ययवनोन्मूलकस्य विक्रमादित्यस्य संसदि लब्धसत्कारः कश्चित् कालिदास आसीदिति व्यक्तमेव । अपरे पुनरेवं परिष्कुर्वते—अत्र 'कालिदासकवयः' इति बहुवचनप्रयोगः कपिञ्जलालम्भवाक्यनयेन कालिदासत्रयीमवगमयति । न चादरातिशयार्थं बहुवचनोपादानमिति वाच्यम्, व्यक्तिमनुरुध्य विहितेषु कविप्रशंसाश्लोकेषु तादृशप्रयोगानुपलम्भात् । नच कविताशक्तिवैकल्येन तथा प्रयोग इत्यपि वाच्यम्, सुधासोदर्यस्य रामचरिताख्यमहाकाव्यस्य तत्कर्तृकत्वासंभवात् । आसंश्च महाराष्ट्रचूडामणेः कान्यकुब्जमहीमहेन्द्र-महेन्द्रपाल-सभालंकृतेर्बालरामायणादिकवयितू राजशेखरमहाकवेः प्राक् त्रयः कालिदासा इति तत्कृतात्—

'एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥'

इति सुभाषितहारावल्यादिस्थश्लोकाज्ज्ञायते । स च राजशेखरमहाकविः शालिवाहनस्य नवमशताब्द्या अन्त्यभागेऽभूदित्यैतिहासिकाः । इतरे पुनरेवं मन्यन्ते—विक्रमादित्यस्य सभाभरणभूत एकः कालिदासः । ततः

'जानकीहरणं कर्तुं रघुवंशे स्थिते सति ।
कविः कुमारदासश्च रावणश्च यदि क्षमः ॥'

इति सूक्तिमुक्तावलीधृत-राजशेखरमहाकविश्लोकतो जानकीहरणाख्यमहाकाव्यप्रणेतुर्विक्रमार्कसप्तमशताब्दीप्रारम्भभुवः कुमारदासकवेः किंचित्प्राक्कालिकत्वेन समानकालिकत्वेन वाध्यवसितो द्वितीयः कालिदासः । एताभ्यामधस्तनस्तृतीय इति ॥

एवं च कालिदासकृतित्वेन ख्यातेषु रघुवंशप्रभृतिष्वेककर्तृकता सुतरां व्युदस्यते । यतस्त्रयोऽपि कालिदासाः कवयः कविकर्मकरणालंकर्मीणाश्चाभूवन् । इतरथा कस्तान्स्मरेत् । तेषु कतमेन कतमा कृतिरकारीति परीक्षातिमात्रं दुःशका । तथापि रघुवंश-कुमारसंभवयोरेक एव कर्तेति प्रतिपादनं बाढं ज्यायः । यत एककर्तृकतायामेव 'आलोकमार्गं सहसा व्रजन्त्या-' इत्यादिश्लोकषट्कस्योभयत्र लेखः संगच्छते । एष एव प्रथमः कालिदास इत्यपि वक्तुं पार्यते । यतः 'उपमा कालिदासस्य-' इति चिरंतनी प्रतीतिः । अनुभूयन्ते च यथोपमालंकारा रघुवंशादौ तथा नेतरत्र । आ-

---

१. शकेति । 'यो रूमदेशाधिपतिं शकेश्वरं जित्वा गृहीत्वोज्जयनीं महाहवे । आनीय संभ्राम्य मुमोच तं त्वहो श्रीविक्रमार्कः समसह्यविक्रमः ॥' इत्यादिकथा विक्रमस्य शकारातिपदेनाभिधाने प्रमाणम् ॥

सीच्च राजशेखरमहाकवितोऽपि प्राचीनानां रामाभ्युदयादिनाटकनिर्मातृ—कान्यकुब्जे-श्वरयशोवर्मनृपतिसभाभरणभूतानां महाकवि-**भवभूति—वाक्पतिराज**—प्रभृतीनां समये कस्यचित्कालिदासस्य साधीयसी प्रसिद्धिरित्यंशे—

**'येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।**
**स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ॥'**

इति पुलकेशिशिलालेखः प्रमाणम् । एतल्लेखकालस्तु—

**'पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु (५५६) च ।**
**समासु समतीतासु शकानामपि भूभुजाम् ॥'**

इति तच्छिलालेखश्लोकेनैव व्यक्तः । एतेन तदानींतनेऽपि काले यो दिगन्तविश्रान्तकीर्तितया लक्ष्यभूतः स एवात्र प्रथमत्वेन विवक्षित इति निष्प्रत्यूहम् ॥

मेघदूत—अभिज्ञानशाकुन्तल—विक्रमोर्वशीय—मालविकाग्निमित्रेषु कापि कृतिः प्रथमकालिदासस्य स्यान्न वा, द्वितीय—तृतीययोस्तु स्यादेव । अत्रोक्तानां प्रायः सर्वेषां कालिदासग्रन्थानां श्लोकास्तत्र तत्र प्राचीनालंकारनिबन्धेषूदाहरणतया न्यस्ताः । चतुर्थः कालिदासस्तु ज्योतिर्विदाभरणकृत् । अयमेतद्ग्रन्थस्यान्तिमेऽध्यायेऽष्टरसखाग्निमितेषु कलिगताब्देषु ग्रन्थनिर्माणं वदति । तथा च तद्वाक्यम्—

**'अब्दे सिन्धुरदर्शनाम्बरगुणै(३०६८)र्याते कलेः संमिते**
**मासे माधवसंज्ञके च विहितो ग्रन्थक्रियोपक्रमः ।**
**नानाकालविधानशास्त्रगदितं ज्ञानं विलोक्यादरा-**
**दूर्जे ग्रन्थसमाप्तिरत्र विहिता ज्योतिर्विदां प्रीतये ॥'**

वस्तुवस्तु चतूरसरुद्र(११६४)मिते शालिवाहनाब्दे ग्रन्थकरणं संभवतीति गणकतरङ्गिण्यां सरयूपारीणपुंगवाः । एतद्ग्रन्थस्यान्तिमाध्यायो नितरामप्रामाणिक इति प्रामाणिकाः । पञ्चमः कालिदासस्तु सम्राडकबरसमकालिकः । अकबरस्तु भतिथि-(१५२७)मिते शालिवाहनाब्दे स्वर्गातिथिरभूत् । कश्चित्कालिदासः कान्यकुब्ज इति श्रूयते, सोऽप्येतेष्वन्यतमः स्यात् । प्रथम इति केचित् । कालिदासविषये बहुभिर्बहूक्तं तदखिलमस्मन्मतेऽनावश्यकमिति विरम्यते ॥

## चण्डीदासः ।

अयं विश्वनाथकविराजपितामहस्यानुजः काव्यप्रकाशटीकाकर्ता । अस्यैव मतं प्रदीपकारेण बहुत्रोपन्यस्तं दूषितं च । उक्तविश्वनाथकालादमुष्य सत्ताकाल उन्नेतुं सुशकः ॥

## चन्द्रशेखरः ।

एष विश्वनाथकविराजस्य जनकः पुष्पमाला—भाषार्णवयो रचयिता ।

## दण्डी ।

अयं महाकविमूर्धन्यो धन्यः शालिवाहनस्य पञ्चमशताब्द्यामासीत् ।

**'त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः ।**
**त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥'**

इति सुभाषितहारावलीधृत—राजशेखरमहाकविश्लोकादमुष्य ग्रन्थत्रयकर्तृकत्व व्यक्तमेव । तत्र काव्यादर्शो दशकुमारचरितं चेति कृतिद्वयी सुप्रसिद्धा तावत् । तृतीया छन्दोविचितिः[1] स्यात् ॥

**धनिकः ।**

अयं विष्णुतनूजन्मा धनिकपण्डितः शालिवाहनस्य नवमशताब्द्याश्चरमभागेऽभूत् । अनेन काव्यनिर्णय—दशरूपावलोकौ निरमायिषाताम् ॥

**धर्मदत्तः ।**

एष विश्वनाथकविराजवृद्धप्रपितामहस्य नारायणस्य पश्चाद्भावी साहित्ये कस्यापि प्रबन्धस्य प्रणेतेति दर्पणादेव ज्ञायते । काव्यप्रकाशस्य दर्पणव्याख्यानतस्तु 'यदाहुः श्रीकलिङ्गभूमण्डलाखण्डलमहाराजाधिराजश्री**नरसिंह**देवसभायां धर्मदत्तं स्थगयन्तः सकलसहृदयगोष्ठीगरिष्ठकविपण्डितास्मत्पितामहश्रीमन्नारायणदासपादाः' इति फक्किकया विशेषोऽवधार्यते । तत्र पितामहशब्ददर्शनेन प्राक्कालनिर्णये संदेहं[2] आपतति ॥

**ध्वनिकारः ।**

कोऽयं ध्वनिकारः किंच तन्नामेति न मनागपि ज्ञायते । किंतु संप्रति ध्वनिकारिकाणां व्याख्याता राजानकानन्दवर्धन एव ज्ञायते । व्यवह्रियते च कैश्चिदयं ध्वनिकारत्वेन । एतत्कृता ध्वनिव्याख्या आलोकपदवाच्या । एवं विभागसत्वेऽपि सव्याख्योऽयं ग्रन्थो ध्वन्यालोकपदेन व्यपदिश्यते । अस्योपरि श्रीमदाचार्याभिनवगुप्तपादैर्लोचनाख्यया व्याख्योन्मीलिता । अयं राजानककुलोत्तंस **आनन्दवर्धना**चार्यो**ऽवन्तिवर्म**णो राज्यकाले कश्मीरास्वासीत् । उक्तं च राजतरङ्गिण्यां कल्हणेन—

**'मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः ।**
**प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ॥'**

अवन्तिवर्मणो राज्यकालस्तु शालिवाहनस्य सप्ताश्वसप्त (७७७) मितवत्सरमारभ्य तर्कखेभ(८०६) मितवत्सरपर्यन्तमासीत् ॥

**नखकुट्टः ।**

कोऽयं नखकुट्टाचार्यः कश्च तद्विहितो निबन्ध इति भृशं विचारणीयम् । एतन्मतं तु दर्पणस्य षष्ठपरिच्छेदे 'नेपथ्योक्तं श्रुतं तत्र—' इत्यादिना प्रतिपादितमास्ते ॥

**नारायणः (नारायणदासः) ।**

अयं विश्वनाथकविराजस्य वृद्धप्रपितामह इत्युक्तं धर्मदत्तप्रस्तावे प्राक् ॥

**पुरुषोत्तमः ।**

द्वौ पुरुषोत्तमौ प्रसिद्धौ । एकस्तावत्त्रिकाण्डशेषादिप्रणेता, परो विष्णुभक्तिकल्पलतानिर्माता । तत्राद्यस्य त्रिकाण्डशेषादिसमाप्तौ पुरुषोत्तमदेव इति नामोपलभ्यते, द्वितीयस्य तु पुरुषोत्तम इति । परमाद्यस्यापि पद्यरचनायां पुरुषोत्तम इत्येव नामधेयं

---

१. **छन्दोविचितिरिति ।** 'छन्दोविचितिरिव मालिनीसनाथा' इति वासवदत्ताश्लेषः । तत्र छन्दोविचितिर्ग्रन्थविशेष इति तट्टीकाकृत् । अयं ग्रन्थो दण्डिना कृत इति जनश्रुतिः ॥

२. **संदेह इति ।** यतो दर्पणे नारायणो वृद्धप्रपितामहत्वेन कीर्तित इति ॥

दृश्यते। तथाहि—त्रिकाण्डशेषप्रारम्भे 'अयं प्रयत्नः पुरुषोत्तमस्य' इति। हारावली-प्रारम्भे 'हारावली विरचिता पुरुषोत्तमेन' इति। तदन्ते 'विनिर्मितेयं पुरुषोत्तमेन' इति। एतेन द्वयोरेकता संभाव्यते। यद्ययमेव विश्वनाथकविराजेन दर्पणस्य नवमपरिच्छेदे 'पुरुषोत्तमस्त्वाह–' इत्यादिना स्मृतः स्यात्तर्हि पूर्वोक्तविश्वानाथकविराजसमयात्प्राग्दशमख्रिस्ताब्दशतकपर्यन्तं पुरुषोत्तमसत्तां कल्पयतामैतिहासिकानामुक्तयो मांसलीभवन्ति। पुरुषोत्तमानुबन्धिनस्तु हारावली-विष्णुभक्तिकल्पलतयोरुपसंहारश्लोकेभ्योऽवसेयाः॥

**भरतः।**

सांप्रतमेतदुपज्ञमेव नाट्यशास्त्रं लोके प्रसिद्धम्। अत एव विक्रमोर्वशीये—

**'मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयो नियुक्तः।**
**ललिताभिनयं तमद्य भर्ता मरुतां द्रष्टुमनाः सलोकपालः॥'**

इति प्रायोजि। यत्त्वयं भरतमुनिर्दर्पणादौ महर्षिपदेन व्यपदिष्टस्तदादरातिशयार्थम्। यतो मन्त्रद्रष्टार एव महर्षयो भवितुमर्हन्तीति निरुक्तादौ प्रसिद्धम्। पुरा तु **शिलालि–कृशाश्व**प्रणीतानि कानिचिन्नटसूत्राणि प्रथितान्यासन्। यदनुरोधेन भगवान्**पाणिनिः**'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४।३।११०,) 'कर्मन्दकृशाश्वादिनिः'(४।३।१११) इति सूत्रे सूत्रयामास। शिलालिना प्रोक्तमधीयते शैलालिनो नटाः। कृशाश्वेन प्रोक्तमधीयते कृशाश्विनो नटाः।

अहो इह सर्वेषां पदार्थानामाविर्भावतिरोभावौ नैसर्गिकौ, न ज्ञायतेऽनाद्यनन्तेऽमुष्मिन्काले कियन्तः पदार्था उत्पद्यन्ते व्यवह्रियन्ते विलीयन्ते च। हंहो एकः स नाट्यप्रचारसमय आसीद्, यत्प्रचारकव्यपदेशेनाचार्याणां सूत्रप्रणयनावश्यकत्वमापतितम्। एकः सांप्रतमास्ते, यत्र पुरा प्रचरितस्यापि यथार्थतया भानं न भवति। ही सर्वातिशायी कालमहिमा। एवं च पुनरेष गण्डोपरि विस्फोटः स्फुरति, यत्खलु संप्रति सांप्रतिकैश्चिरंतनतया प्रतीतान्यपि विषयान्तराणि नानाविधदोषारोपभूम्ना कलुषीक्रियन्ते। कलुषीक्रियन्तां यथारुचि। किमनेन गगने बीजाकरणप्रयासेन। अत्रेदं विचार्यते—

आर्षबन्धमनुसृत्य मानुषबन्धप्रवृत्तिः, आहोस्विन्मानुषमनुसृत्यार्षप्रवृत्तिः। तत्र मानुषबन्धस्यार्षमूलकत्वं सर्वसंमतम्। इतरथा दशरूपकादिनूतननिबन्धा अपि नाट्यशास्त्रस्य मूलभूता भवेयुः। परमिदानीं दशरूपकप्रमेयनिरूपकाणां निबन्धानां विलुप्तप्रायत्वे नाट्यशास्त्रमेव बहु जानानानामायुष्मतामन्तःकरणे नाग्निपुराणवन्नाट्यशास्त्रे काचन दुष्कल्पना प्रादुर्भूता। मन्ये प्रादुर्भविष्यति तत्तद्विषयजातप्रतिपादकनिबन्धशतप्रसिद्धियोगेनाग्नेय इव नाट्यशास्त्रेऽपि नाट्यप्रदीप–नाट्यदर्पण–नाट्यलोचन–रत्नाकर–सुधाकर–नागरसर्वस्व–मदनोदय–भावप्रकाशिकादिप्रकाशेन अन्यथा किमपराद्धमग्निपुराणेन, यदिदं केनचिदितस्ततः संगृहीतमिति मिथ्यापवादमषीमलीमसं क्रियते। कस्मात्संगृहीतमित्यनुयोगदशायां किमुत्तरमुपादेयं स्यात्।

(१) किमेतच्छन्दोभ्यः संगृहीतम्, छन्दांसि तु वैदिकानि लौकिकानि च लक्ष्याणि लक्ष्यीकृत्य प्रवृत्तानि। तत्र लौकिकानि लक्ष्याणि तु पुराणान्येव।

(२) किमेतदलंकारेभ्यः संगृहीतम्, अलंकारास्तु ऋग्यजुःसामभ्यो निर्गत्येहैव प्रतिष्ठां प्रतिपेदिरे। किंचाग्नेयश्लोका ध्वन्यालोकादिषु प्राचीनालंकारिकनिबन्धेषूपलभ्यन्ते। न चैतावता तेभ्य आग्नेये संगृहीता इति निश्चेतुं पार्यते। किमसौ संग्रहः सौष्ठवार्थम् उतासौष्ठवार्थम्। यदि सौष्ठवार्थम् 'अपारे काव्यसंसारे–' इत्यादिभ्यो विशिष्टे ध्वन्यादिविषये वर्तमानेऽप्येषैव श्लोकद्वयी किमिति संगृहीता। नहि राजद्रव्यापहारकर्मणीव तत्र किमपि भयमाशङ्क्यते। यद्यसौष्ठवार्थम्, को नाम प्रेक्षावानसौष्ठवार्थं प्रयतेत।

(३) किमेतत्कोषात्संगृहीतम्, कोषस्तु प्रथममिहैव प्रादुर्भूतः। तदन्वमरकोषादयो जज्ञिरे। एतदुक्तं भवति—यथा निरुक्ते वैदिकशब्दानां संग्रहो निघण्टुपदवाच्यो भगवता **यास्के**न विहितस्तथैव लौकिकशब्दानां संग्रहो भगवता **कृष्णद्वैपायने**न विहितः। ततोऽमुं शब्दसंग्रह**ममरसिंहो**ऽपहृत्य तत्कालप्रसिद्धनानाशब्दयोजनेन परिष्कृत्य च नामलिङ्गानुशासनाख्यतया प्रचारितवान्। उक्तं चामुना—'समाहृत्यान्यतन्त्राणि–' इति। अत्र 'तन्त्राणि' इति बहुवचनप्रयोगेण नानाग्रन्थेभ्योऽमरकोषनिर्माणं व्यक्तमेव। एषैव कोषनिर्मितिशैली। पुरुषोत्तमेनाप्युक्तम्—

**'नानाकाव्यपुराणनाटककथाकोषेतिहासस्मृति-**
**ज्योतिःशास्त्रगजाश्वमानवभिषक्कोषान्प्रयत्नादियम्।**
**दृष्ट्वान्यानि च शाब्दिकैः सह कृता हारावली यत्नतः'** इति॥

एवं चामरकोषनिर्माणेऽग्निपुराणं मुख्यं साधनमभूत्। यथा—**भास्कररायनि**र्मितस्य वैदिककोषस्य निर्माणे यास्कोक्तं निरुक्तमिति। केवलमियती भिदा, यत्खलु सर्वतन्त्रस्वतन्त्रो भास्कररायदीक्षितो वैदिकमार्गावलम्बित्वात्—

**'यास्कव्याख्यानुगतः संपूर्णो वैदिकः कोषः।'**

इति नामग्रहणपुरःसरं स्वजीव्यमुदटङ्कयत्। अमरसिंहस्तु पुनर्वेदविरुद्धमतावलम्बित्वाद्वैदिकधर्मानुगतस्याग्नेयस्य महापुराणस्य तत्कर्तुर्वा नामग्रहणं नाकरोत्। किंतु स्वस्य सर्वापहारकत्वदोषनिरासाय 'अन्यतन्त्राणि' इतीहान्यग्रहणमेवालंकर्माणममंस्त। किं चामुष्य ग्रन्थापहारकत्वशीलमपि 'अमरसिंहो हि पापीयान्सर्वं भाष्यमचूचुरत्' इति परम्पराप्रसिद्धेन श्लोकगन्धिना गद्येनाकर्ण्यते। अत्रेदमपि बीजं संभाव्यते—यदा अमरसिंहो निजकोषेऽनेकान्व्याकरणभाष्यानुशिष्टशब्दकलापसिद्धान्तानुल्लिलेख, तदा तल्लेखमसहमानैः प्रचारितासौ किंवदन्तीति।

एवमितरेऽप्याक्षेपाभासा निरसितुमीषत्कराः। किं पल्लवितेन। सर्वेषां वेदानां प्रमेयावभासकं हि पुराणम्, यत इत एवाचार्याणां सारस्वतवैभवः पप्रथे। न केवलमीदृग्गुणपरीतमग्निपुराणमेव, गारुडेऽप्यायुर्वेद–नीति–सामुद्रिक–रत्नपरीक्षादयोऽनेके विश्वजनीना विषया विप्रकीर्णाः। एवंप्रायानङ्कुरायमाणान्विषयानाहृत्यैवाचार्यैः स्वस्वग्रन्थाः सहस्रशाखीकृताः। आस्तां तावदियं महीयसी गवेषणा। आबालविदितं

---

१. 'अपारे काव्यसंसारे–' इत्यादयः॥

दिङ्मात्रमुदाह्रियते—कालिदासस्य काव्ये न तु कस्यापि परकाव्योद्भूतत्वशङ्का परं तत्काव्यमपि पुराणमनुसरिति । तथा च शिवपुराणे ज्ञानसंहितायाम्—

'रसानां बध्नती काचित्तथैव संयुता ययौ ।'
'काचिद्धस्ते शलाकां च धृत्वाञ्जनसमन्विताम् ।'
'काचित्तु कामिनी पादं रञ्जयन्ती यदा तदा ।'

इति श्लोकभागैः समं 'अर्धाञ्चिता–विलोचनं दक्षिणमञ्जनेन–प्रसादिकालम्बितमग्रपादम्–' इति रघुवंश-कुमारसंभवयोः सप्तमसर्गश्लोकानां सूक्ष्मदृशा संवादे विधीयमाने शिवपुराण-रघुवंशश्लोकानामुपजीव्योपजीवकभावो व्यक्तं फलति । तथैव—

'हित्वेन्द्रप्रमुखान्देवानैश्वर्यसंयुतानपि ।
पतिं पिनाकपाणिं वै प्राप्तुमिच्छति सांप्रतम् ॥'
'इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥'

एवमादयः । अत एव—

'छायोपजीवी पदकोपजीवी पादोपजीवी सकलोपजीवी ।
भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्यः ॥'

इत्यालंकारिकसमयेन भगवद्वाल्मीकि–व्यासादीनां भुवनोपजीव्यत्वं तु सर्वत्रैवोपपद्यते, न क्वापि व्यभिचरतीत्यलं प्रसक्तानुप्रसक्त्या ॥

नाट्यशास्त्रं कदा प्रादुर्भूतमिति विचारे मुनीन्प्रति भरतवाक्यम्—

'पूर्वं कृतयुगे विप्रा वृत्ते स्वायंभुवेऽन्तरे ।
त्रेतायुगे संप्रवृत्ते मनोर्वैवस्वतस्य च ॥
ग्राम्यधर्मे प्रवृत्ते तु कामलोभवशंगते ।
ईर्ष्याक्रोधादिसंमूढे लोके सुखितदुःखिते ॥
देवदानवगन्धर्वै रक्षोयक्षमहोरगैः ।
जम्बूद्वीपे समाक्रान्ते लोकपालप्रतिष्ठिते ॥
महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः ।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ॥
न च वेदविहारोऽयं संश्राव्यः शूद्रजातिषु ।
तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम् ॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च ।
सस्मार चतुरो वेदान्योगमास्थाय तत्त्ववित् ॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससंग्रहम् ।
भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् ॥
सर्वशास्त्रार्थसंपन्नं सर्वशिल्पप्रवर्तकम् ।
नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम् ॥

संकल्प्य भगवानेवं सर्वान्वेदाननुस्मरन् ।
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसंभवम् ॥
जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान्रसानाथर्वणादपि ॥
वेदोपवेदैः संबद्धो नाट्यवेदो महात्मना ।
येन नारदसंयुक्तो वेदवेदाङ्गकारणम् ॥
उपस्थितोऽहं लोकेशं प्रयोगार्थं कृताञ्जलिः ।
नाट्यस्य ग्रहणं प्राप्तं ब्रूहि किं करवाण्यहम् ॥' इति ॥

## भर्तृहरिः (हरिः) ।

अयमुज्जयिनीनाथस्य विक्रमादित्यस्य ज्येष्ठो भ्रातासीत्। अतोऽस्य विक्रमकालिकत्वम् । अस्य हरिर्नाम । अत एव 'तथापि हरिबद्धेन-' इति प्रायुङ्क्त **कैयटः** । बहुत्र भर्तृ-हरिरित्यपि दृश्यते। तत्र भर्तृपदं प्रजापोषकत्वख्यापकम्, न तु काश्मीरिके **भर्तृमेण्ठा**दाविवोट्टङ्कीभूतम् । दुष्टस्त्रीखिन्नचेतसानेन राज्यलक्ष्मीमवज्ञाय वैराग्यमेवाश्रायि । अनेन वैयाकरणधुरीणेन साराख्यमहाभाष्यव्याख्या, वाक्यपदीयं, शतकत्रयं च निरमायि । तत्र सारस्य सारवत्ता लोकोत्तरैव, यदाधारेण काश्मीरिको महावैयाकरणः कैयटो भाष्योपरि प्रदीपं निरमात् । वाक्यपदीयं नाम वाक्यपदे अधिकृत्य कृतो ग्रन्थः । 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' (४।३।८८) इति सूत्रेण च्छः । एतस्य **हेलराज-पुञ्जराजौ** व्याख्यातारौ, तत्र हेलराजः कह्लणात्प्राक्तनः । तथा चोक्तम्—

'बद्धा द्वादशभिर्ग्रन्थसहस्रैः पार्थिवावलिः ।
प्राङ्महाव्रतिना येन हेलाराजद्विजन्मना ॥' इति ॥

## भोजदेवः (भोजः) ।

अयं धारानगरीनाथो महाविचक्षणः शालिवाहनस्य त्रिचत्वारिंशदधिकनवमशताब्द्यामासीत् । अनेन सरस्वतीकण्ठाभरणप्रभृतयोऽनेके ग्रन्था रचिताः, दानमानाभ्यां विद्वांसोऽभ्यर्चिताश्च । विशेषज्ञप्त्यै तद्दानपत्रस्य संक्षेपोऽत्र प्रदर्श्यते—

'जयति व्योमकेशोऽसौ यः सर्गाय बिभर्ति ताम् ।
ऐन्दवीं शिरसा लेखां जगद्बीजाङ्कुराकृतिम् ॥'

परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**सीयकदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**वाकपतिराज**देवपादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**सिन्धुराज**देवपादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वरश्री**भोजदेवः** कुशली नागह्रदपश्चिमपथकान्तःपातिवीराणके समुपगतान्समस्तराजपुरुषान्ब्राह्मणोत्तरान्प्रतिनिवासिपट्टकिलजनपदादींश्च समादिशति—अस्तु वः संविदितम्, यथा आतीताष्टसप्तत्यधिकसाहस्रिकसंवत्सरे माघासिततृतीयायां रवावुदगयन-

---

१. ग्रन्थशब्दः श्लोकवाची । तेन यथाश्रुतमर्थं योजयतां व्याख्या नादरणीया ।

पर्वणि कल्पितहलानां लेख्ये श्रीमद्धारायामवस्थितैरस्माभिः स्नात्वा चराचरगुरुं भगवन्तं भवानीपतिं समभ्यर्च्य संसारस्यासारतां दृष्ट्वा—

**'वाताभ्रविभ्रममिदं वसुधाधिपत्य-**
**मापातमात्रमधुरो विषयोपभोगः ।**
**प्राणास्तृणाग्रजलबिन्दुसमा नराणां**
**धर्मः सखा परमहो परलोकयाने ॥'**

इति जगतो विनश्वरं स्वरूपमाकलय्य उपरिलिखितग्रामः स्वसीमातृणागोचरयूतिपर्यन्तः सहिरण्यभागभोगः सोपरिकरः सर्वादायसमेतः ब्राह्मण**धनपतिभट्टाय भट्टगोविन्द**सुताय बह्वृचाश्वलायनशाखाय त्रिप्रवराय वेल्लवल्लप्रतिबद्धश्रीवादाविनिर्गतराधसुरसङ्गकर्णाटाय मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये अदृष्टफलमङ्गीकृत्य आचन्द्रार्कार्णवक्षितिसमकालं यावत्परया भक्त्या शासनेनोदकपूर्वं प्रतिपादित इति मत्वा यथादीयमानभागभोगकरहिरण्यादिकमाज्ञाश्रवणविधेयैर्भूत्वा सर्वमस्मै समुपनेतव्यम् । सामान्यं चैतत्फलं बुद्ध्वास्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मादायोऽयमनुमन्तव्यः पालनीयश्चेति । संवत् १०७८ चैत्रसुदि १४ स्वयमाज्ञामङ्गलं महाश्रीः । स्वहस्तोऽयं श्रीभोजदेवस्य ॥

## महिमा (महिमभट्टः) ।

अयं नैयायिकपुंगवो ध्वनिनिरूपितव्यञ्जनावृत्तिनिरासार्थं व्यक्तिविवेकाख्यं प्रबन्धं निर्मितवान् । एतच्च—

**'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् ।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥'**

इत्यार्यया बुध्यते । बुध्यते च राजानकानन्दवर्धनादर्वाचीनता राजानकमम्मटात्प्राचीनता चास्य । यत एतेन ध्वनिध्वंसाय व्यक्तिविवेको विहितः । राजानकमम्मटेन व्यक्तिविवेकोत्प्रेक्षितप्रमेयः प्रकाशस्य पञ्चमोल्लासोपान्त्ये निरस्त इति तट्टीकाकारैर्विशदीकृतम् ॥

## मम्मटः ।

अयं राजानककुलोत्तंसो महावैयाकरणः परममाहेश्वरः शालिवाहनस्यैकादशशताब्द्याः पूर्वभागे कश्मीरानलंचकार । मम्मटस्य विशेषोदन्तस्तु प्रकाशस्य सुधासागराख्यटीकाप्रारम्भे कान्यकुब्जावतंसेन **भीमसेन**दीक्षितेन पद्यैरुपनिबद्धः । स यथा—

**'शब्दब्रह्म सनातनं न विदितं शास्त्रैः क्वचित्केनचि-**
**त्तद्देवी हि सरस्वती स्वयमभूत्काश्मीरदेशे पुमान् ।**
**श्रीमज्जय्यटगेहिनीसुजठराज्जन्माप्य युग्मानुजः**
**श्रीमन्मम्मटसंज्ञयाश्रिततनुं सारस्वतीं सूचयन् ॥**
**मर्यादां किल पालयञ्शिवपुरीं गत्वा प्रपठ्यादरा-**
**च्छास्त्रं सर्वजनोपकाररसिकः साहित्यसूत्रं व्यधात् ।**

---

१. साहित्येति । 'नियतिकृतिनियमरहितां—' इत्यादिकारिकारूपमित्यर्थः ॥

तद्वृत्तिं च विरच्य गूढमकरोत्काव्यप्रकाशं स्फुटं
वैदग्ध्यैकनिदानमर्थिषु चतुर्वर्गप्रदं सेवनात् ॥
कस्तस्य स्तुतिमाचरेत्कविरहो को वा गुणान्वेदितुं
शक्तः स्यात्किल मम्मटस्य भुवने वाग्देवतारूपिणः ।
श्रीमान्कय्यट उव्वटो ह्यवरजो यच्छात्रतामागतो
भाष्याब्धिं निगमं[1] यथाक्रममनुव्याख्याय सिद्धिं गतः ॥'

मम्मटेन काव्यप्रकाशः परिकरालंकारावधिरेव कृतः । अवशिष्टभागस्तूत्कर्षमहिम्ना शिशुपालवधमप्यधरीकुर्वाणस्य पञ्चाशत्सर्गात्मकस्य विद्याधिपत्यपरनामकराजानक—**रत्नाकर**-प्रणीतस्य हरविजयाख्यमहाकाव्यस्य टीकाकृता राजान**कालक**सूरिणा पूरित इति प्रसिद्धम् । उक्तं च—

'कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः ।
प्रबन्धः पूरितः शेषो विधायालकसूरिणा ॥'

## राघवानन्दः ।

अयं सांधिविग्रहिको महापात्रो दर्पणकारस्य कश्चिदनुबन्धीति प्रतीयते । अनेन किमपि नाटकं निरमायीति 'यथा—राघवानन्दानां नाटके' इति दर्पणतृतीयपरिच्छेदोक्त्या व्यक्तम् ॥

## रुद्रटः ।

अयं काव्यालंकारप्रणेता महाकविर्महाराजभोजदेवात्प्राचीनः । यतः—

'किं गौरि मां प्रति रुषा ननु गौरहं किं
कुप्यामि कां प्रति मयीत्यनुमानतोऽहम् ।
जानाम्यतस्त्वमनुमानत एव सत्य-
मित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥'

इति काव्यालंकारपद्यं सरस्वतीकण्ठाभरणे द्वितीयपरिच्छेदे उदाहृतम् । अस्य नामान्तरं **शतानन्दः**, जनको **वामकभट्टः**, वेदः सामेति सर्वं तत्कृतैः[2] खड्गमुसलचापबाणशूलशक्तिहलबन्धगर्भितैरष्टभिः श्लोकैर्यदष्टारं महाचक्रमुत्पद्यते तन्निर्गतात्—

---

१. निगमं यजुर्वेदसंहिताम् ॥

२. बन्धसृष्टिरत्नभूतस्य वक्ष्यमाणस्य चक्रबन्धस्य स्वरूपख्यात्यै दर्पणीयबन्धप्रकरणन्यूनतापूर्त्यै च खड्गादिबन्धाः साकारा विन्यस्यन्ते । तत्र

खड्गबन्धो यथा—

मारारिशक्ररामेभमुखैरासाररंहसा । साराररब्धस्तवा नित्यं तदर्तिहरणक्षमा ॥ १ ॥
माता नतानां संघट्टः श्रियां बाधितसंभ्रमा । मान्याथ सीमा रामाणां शं मे दिश्यादुमादिजा ॥ २ ॥

मुसलबन्धो यथा—

मायाविनं महाहावा रसायातं लसद्भुजा । जातलीलायथासारवाचं महिषमावधीः ॥ ३ ॥

धनुर्बन्धो यथा—

मामभीदा शरण्या मुत्सदैवारुक्प्रदा च धीः । धीरा पवित्रा संत्रासात्रासीष्टा मातरारम ॥ ४ ॥

'शतानन्दापराख्येन भट्टवामकसूनुना ।
साधितं रुद्रटेनेदं सामाजा धीमतां हितम् ॥'

इति श्लोकाज्ज्ञायते । शिशुपालवधादिविलक्षणोऽयं चक्रबन्धः कान्न विस्माययति । शृङ्गारतिलककर्ता **रुद्रो** न तु रुद्रटः । उक्तं च तिलकान्ते—'शृङ्गारतिलकविधिना पुनरपि रुद्रः प्रसादयति' इति ॥

## वक्रोक्तिजीवितकारः[1] ।

ग्रन्थतत्कर्त्रोर्विषये न किमपि बुध्यते ॥

## वाचस्पतिमिश्रः ।

एष सर्वतन्त्रस्वतन्त्रो भामत्याख्यशारीरकमीमांसाभाष्यव्याख्यानादिनिर्माता षड्दर्शनीव्याख्यातृत्वेन ख्यातः शालिवाहनस्यैकादशाब्द्याः पूर्वभागे मिथिलामण्डलं मण्डयामासेत्यैतिहासिकाः ।

कवितार्किकचक्रचूडामणिना कान्यकुब्जकुलकमलदिनमणिना कान्यकुब्जाधिपति**विजयचन्द्र**सभालंकारेण नैषधीयचरितादिमहानिबन्धकारेण श्रीश्रीहर्षेण खण्डनखण्डखाद्ये खण्डितानां नैयायिकसिद्धान्तानामुद्धारकत्वेन खण्डनोद्धारसंज्ञां दधानस्य प्रबन्धस्य कर्ता त्वस्माद्भिन्नः ॥

## वामनः ।

अयं सवृत्तिकाणां काव्यालंकारसूत्राणां प्रणेता शालिवाहनस्य सप्तमशताब्द्याः प्रथमभागान्नोर्ध्वतनः । यस्मादसौ स्वग्रन्थे भवभूतिप्रणीतस्य वीरचरितस्य 'दोर्दण्डाञ्चित-

---

शरबन्धो यथा—

माननापरुषं लोकदेवीं सद्रस सन्नम । मनसा सादरं गत्वा सर्वदा दास्यमङ्ग ताम् ॥ ५ ॥

शूलबन्धो यथा—

मा मुषो राजस स्वासँल्लोककूटेशदेवताम् । तां शिवावाशितां सिद्ध्याध्यासितां हि स्तुतां स्तुहि ६

शक्तिबन्धो यथा—

माहिषाख्ये रणेऽन्या नु सा नु नानेयमत्र हि । हिमातङ्कादिवामुं च कं कम्पिनमुपप्लुतम् ७

हलबन्धो यथा—

मातङ्गानङ्गविधिनामुना पादं तमुद्यतम् । तङ्गयित्वा शिरस्यस्य निपात्याहन्ति रंहसा ॥ ८ ॥

अष्टभिर्महाचक्रबन्धनिष्पत्तिः ॥

१. एतद्विषये डॉक्टर—रामकृष्ण—गोपाल—भाण्डारकरपण्डितवरैरस्मत्सविधे कृपापत्रं प्रेषितं तदेवोपयुक्तत्वादंशत उपन्यस्यते—'.........दुर्गाप्रसादाचार्यानसकृत्प्रणम्य विज्ञापयति पुण्यपत्तनस्थो रामकृष्णः—संप्राप्तो भवदीयलेखः । वक्रोक्तिजीवितं नाम कश्चिदलंकारविषये ग्रन्थः । स च रुय्यककृतालंकारसर्वस्वाख्ये संदर्भे प्रमाणत्वेन क्वचिदुपन्यस्तः । रुय्यकश्च श्रीकण्ठचरितकृतो मङ्खस्य गुरुः । मङ्खश्च जयसिंहाख्यस्य कश्मीराधिपतेरलंकारनाम्नो मन्त्रिणो भ्राता । स च जयसिंहः ११२९ खिस्तवत्सरतः ११५० वत्सरपर्यन्तं कश्मीरभूमिं भुक्तवान् ।.............॥'

चन्द्रशेखरधनुः–' इति पद्यमुदाहृतवान् । भवभूतिस्तु शालिवाहनसप्तमशताब्दीप्रारम्भे कान्यकुब्जाधिपतेर्यशोवर्मणः सभायामासीदिति व्यक्तम् । अथ च ध्वन्यालोकलोचने 'अनुरागवती संध्या–' इत्युदाहरणविचारावसरे 'वामनाभिप्रायेणायमाक्षेपः, **भामहा**भिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरेकमेवोदाहरणं व्यतरद्ग्रन्थकृत्' इति श्रीमदाचार्याभिनवगुप्तपादव्याख्यानेन ध्वन्यालोकप्रणेतुरानन्दवर्धनाचार्यादस्य प्राचीनत्वमवगम्यते । तस्मान्नवमशताब्द्याः प्रथमभागतो नाधस्तनः ।

केचित्तु—

**'मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा ।**
**बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥'**

इति राजतरङ्गिणीबलेनैनं कश्मीराधिपते**र्जयापीड**स्यामात्यं कथयन्ति ।

पाणिनिसूत्रवृत्तिकाशिकाकर्ता **वामन**स्त्वस्मादन्यः प्रत्नश्चेति पाश्चात्यपण्डितानां परामर्शः । ख्रिस्ताब्दस्य सप्तमशतकपूर्वार्धे भारतमण्डले तीर्थयात्रार्थं भ्रमतः कस्यचिच्चीनदेशीयस्य यात्रावर्णनपुस्तके वामनकृतपाणिनिसूत्रव्याख्यापठनपाठनप्राचुर्यलेखस्तत्परामर्शे मूलमिति ।

अथ चेयं साहित्यदर्पणस्य विवृतिः श्री**रामचरण**-तर्कवागीश-भट्टाचार्यैः शालिवाहनस्य द्वाविंशत्युत्तरषोडशशताब्द्यां व्यधायीत्येतद्विवृत्त्यन्ते 'अक्षिपक्षरसचन्द्रसंमिते–' इत्यादिपद्येन व्यक्तम् ।

एतट्टीका सम्यग्ग्रन्थं योजयन्ती प्रमेयांशविचारे प्रौढिं च प्रकटयन्ती सच्छात्राणामुपकर्त्रीति न मनागपि व्यतिक्रमः । किं तु बहुत्रात्र प्रतीकविकलो विरलार्थप्रतिपादकश्च लेखो मूलं न नियन्त्रयतीति मूलानुपूर्वीगवेषणे महान्क्लेशः । पञ्चषभिन्नमातृकपुस्तकाधारेण मूलशुद्ध्यै यतमानेनापि मया कुहचिन्मूलमुन्नेतुं नाशाकि ।

एतद्व्याख्यासद्भावे प्रद्योतनोद्द्योते प्रदीपद्योतवन्मूलयोजनमपार्थकमिति मन्यमानेन प्रायो विशेषाधानायैव **छाया**ख्या विवृतिपूर्तिरकारि । अत्र प्राचामर्वाचां चालंकारिकाणां संदर्भेभ्यो विशिष्टभागं शब्दतस्तात्पर्यतश्चानूद्य मांसलीकृतो दर्पणानुक्तविषयो यत्नतो न्यासि । अनुक्तत्वेनावधार्यमाणा अपि नातिप्रयोजनीया उक्तिमुद्रादिका उपैक्षिषत । भवन्ति चात्रानुषङ्गिकाः श्लोकाः—

**आदौ दशकण्ठवधं[1] तत उपपत्तीन्दुशेखरस्तदनु[2] ।**
**अल्पाप्यर्थप्रचुरा रविसिद्धान्ते समीक्षा च[3] ॥**

---

१ दशकण्ठवधं चम्पूकाव्यम् ॥

२. उपपत्तीन्दुशेखरः श्रीमद्भास्कराचार्यप्रणीतस्य सिद्धान्तशिरोमणेर्व्याख्यारूपः ॥

३. सूर्यसिद्धान्तसमीक्षा (मुम्बय्यां निर्णयसागरे मुद्रिता ॥)

